॥ श्रीराधासर्वेश्वरो विजयते॥



॥ श्रीभगवन्निम्बार्काचार्याय नमः॥

# श्रीसुदर्शन कवचम्



## मंगलाचरण :

राधासर्वेश्वरं वन्दे प्रणतार्तिप्रणाशनम् ।
भुक्ति-मुक्ति प्रदातारं पूर्णब्रह्म सनातनम् ।।
श्रीमद्धंसकुमारॉंश्च नारदं मुनिपुङ्गवम् ।
निम्बार्कं श्री निवासं च प्रणमामि पुनः पुनः ।।

## श्री गुरु स्मरणम् :

आनन्दमानन्दकरं प्रसन्नं
ज्ञानस्वरुपं निजभावयुक्तम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं
श्रीमद्गुरुं नित्यमहं नमामि ।।
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परंब्रह्म तस्मै श्री गुरवे नमः ।।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
यत्पदं दर्शितं येन तस्मै श्री गुरवे नमः ।।
अज्ञानतिमिरान्धास्यना ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः ।।

**।। श्रीगुरुचरणकमलेभ्यो नमः ।।**

# अथ श्री सुदर्शन कवचम्

**विनियोग :-**

ॐ अस्य श्री सुदर्शनकवच-महामन्त्रस्य अहिर्बुध्न्यो भगवान् ऋषिः अनुष्टुप् छन्दः श्रीसुदर्शनमहापुरुषो विष्णुर्देवता, ॐ बीजम्, ह्रीं शक्तिः, क्रौं कीलकम्, श्री सुदर्शन-प्रसाद-सिद्धि-पुरस्सरं ममाभीष्ट-सिद्ध्यर्थे जपे विनियोगः।

**ऋष्यादिन्यासा :-**

ॐ अहिर्बुध्न्याय भगवते ऋषये नमः शिरसि।

ॐ अनुष्टुप्-छन्दसे नमो मुखे।

ॐ श्रीसुदर्शन-महापुरुष-विष्णु-देवतायै नमो हृदये।

ॐ ॐ बीजाय नमो गुह्ये।

ॐह्रीं शक्तये नमः पादयोः।

ॐ क्रौं कीलकाय नमः सर्वाङ्गे।

दिग्बन्धनम् –

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
प्राचीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
आग्नेयीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
याम्यां दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
नैर्ऋतिं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
वारुणीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
वायवीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
कौबेरीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
ऐशानीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
ऊर्ध्वां दिशं चक्रेण बध्नामि।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
अधो दिशं चक्रेण बध्नामि।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
सर्वां दिशं चक्रेण बध्नामि।

**विनियोग :-**

अस्य श्रीसुदर्शन-षडक्षर-महामन्त्रस्य अहिर्बुध्न्यो भगवान् ऋषिः, अनुष्टुप् छन्दः, श्रीसुदर्शन-देवता, ॐ बीजम्, ह्रीं शक्तिः, क्रौं कीलकम्, श्रीसुदर्शन-प्रसाद-सिद्धि-पुरस्सरं ममाभीष्ट-सिद्ध्यर्थे जपे विनियोगः।

**ऋष्यादिन्यासा :-**

ॐ अहिर्बुध्न्याय भगवते ऋषये नमः शिरसि।

ॐ अनुष्टुप्-छन्दसे नमो मुखे।

ॐ सुदर्शन-देवतायै नमो हृदये।

ॐ ॐ बीजाय नमो गुह्ये।

ॐ ह्रीं शक्तये नमः पादयोः।

ॐ क्रौं कीलकाय नमः सर्वाङ्गे।

**कर–न्यासा:**

ॐ सं आचक्राय स्वाहा अङ्गुष्ठाभ्यां नमः ।

ॐ हं विचक्राय स्वाहा तर्जनीभ्यां नमः ।

ॐ स्रां सुचक्राय स्वाहा मध्यमाभ्यां नमः ।

ॐ रं त्रैलोक्य–रक्षण–चक्राय स्वाहा अनामिकाभ्यां नमः ।

ॐ हुं ज्वाला–चक्राय स्वाहा कनिष्ठिकाभ्यां नमः ।

ॐ फट् असुरान्तक–चक्राय स्वाहा करतल–करपृष्ठाभ्यां नमः ।

**हृदयादि–न्यासा :–**

ॐ सं आचक्राय स्वाहा ज्ञानाय हृदयाय नमः ।

ॐ हं विचक्राय स्वाहा ऐश्वर्याय शिरसे स्वाहा ।

ॐ स्रां सुचक्राय स्वाहा शक्तये शिखायै वषट् ।

ॐ रं त्रैलोक्य–रक्षण–चक्राय स्वाहा बलाय कवचाय हुम् ।

ॐ हुं ज्वाला–चक्राय स्वाहा तेजसे नेत्रत्रयाय वौषट् ।

ॐ फट् असुरान्तक–चक्राय स्वाहा वीर्याय अस्त्राय फट् ।

**अक्षर–न्यासा :–**

ॐ ॐ नमो मस्तके । ॐ सं नमो भ्रुवोर्मध्ये ।
ॐ हं नमो मुखे । ॐ स्रां नमो हृदि ।
ॐ रं नमो गुह्ये । ॐ हुं नमो जान्वोः ।
ॐ फट् नमः पादयोः ॐ भूर्भुवः स्वरोमिति सर्वाङ्गे ।

**ध्यानम् –**

सुदर्शन महाज्वाल सूर्य–कोटि–सम–प्रभ ।
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय ।। १ ।।
यस्य स्मरणमात्रेण विद्रवन्ति सुरारयः ।
सहस्त्रार नमस्तुभ्यं विष्णु–पाणि–तलाश्रय ।। २ ।।
क्षिप्रं सुदर्शन चक्र ज्वाला–मालातिभीषण ।
सर्व–रोग–प्रशान्तिं त्वं कुरु देववराऽच्युत ।। ३ ।।
सुदर्शन महाज्वाल गोविन्द–स्वकरायुध ।
तीक्ष्ण–धारमहावेग कोटि–सूर्य–सम–प्रभ ।। ४ ।।
त्रैलोक्यं रक्ष रक्ष त्वं दुष्ट–दानव–मर्दन ।
सुदर्शन महाज्वाल छिन्धि छिन्धि महागदम् ।। ५ ।।

छिन्धि वातं च पित्तं च छिन्धि घोरं महाविषम्।
रुजं दाहं च शूलं च निमिषं जाल-गर्दभम्।। ६।।
सुदर्शनस्य मन्त्रेण ग्रहा यान्तु दिशो दश।
चौर-व्यालादयो यान्तु सर्वबाधा प्रशाम्यतु।। ७।।

*(इति ध्यात्वा पञ्चोपचारैः सम्पूज्य सुदर्शन-षडक्षरमन्त्रमष्टोत्तरशतं सुदर्शन गायत्रीं च द्वादशवारं जपित्वा सुदर्शन-कवच-पाठं कुर्यात्।)*

**श्रीसुदर्शन-षडक्षर-मन्त्र :-**

"ॐ सहस्रार हुँ फट्"

**श्रीसुदर्शन-गायत्री-मन्त्र :-**

ॐ सुदर्शनाय विद्महे, हेतिराजाय धीमहि, तन्नश्चक्रं प्रचोदयात्।

**श्रीसुदर्शन-कवचम् -**

ॐ नमो भगवते भो भो सुदर्शन दुष्ट-दारिद्र्यं दुरितं हन हन जहि जहि पापं मथ मथ ममाऽऽरोग्यं कुरु

कुरु ठः ठः ह्रीं ह्रीं ह्रां हुं ॐ सहस्त्रार हुं फट् स्वाहा।

ॐ त्रैलोक्याभयकर्ता त्वमाज्ञापय जनार्दन।
सर्व-दुःखानि रक्षांसि क्षयं नय च सत्वरम्॥
प्राच्यां रक्ष प्रतीच्यां च दक्षिणोत्तरयोस्तथा।
रक्षां करोतु सर्वत्र नृसिंहस्य स्व-गर्जनैः॥
श्रीमहावैष्णव रक्ष, दुष्टान् हन हन फट् स्वाहा॥

ॐ सहस्रादित्य-संकाशं सहस्र-वदनं परम्।
सहस्रदोः सहस्रारं प्रपद्येऽहं सुदर्शनम्॥ १॥
हसन्तं हार-केयूर-मुकुटाऽङ्गद-भूषणम्।
भूषणोद्भासिताङ्गं च प्रपद्येऽहं सुदर्शनम्॥ २॥
स्राकारसहितं मन्त्रं जपतां शत्रु-निग्रहम्।
सर्व-दोषस्य हर्त्तारं प्रपद्येऽहं सुदर्शनम्॥ ३॥
रणत्किङ्किणीजालेन राक्षसघ्नं महाद्भुतम्।
व्याप्तकेशं विरूपाक्षं प्रपद्येऽहं सुदर्शनम्॥ ४॥
हुङ्कारं भैरवं भीमं प्रपन्नार्त्तिहरं प्रभुम्।
धन-धान्य-प्रदातारं प्रपद्येऽहं सुदर्शनम्॥ ५॥
फट्-कारान्तमनिर्देश्यं महामन्त्रेण संयुतम्।
शिवं प्रसन्न-वक्त्रं च प्रपद्येऽहं सुदर्शनम्॥ ६॥

एतैः षड्भिः स्तुतो देवो भगवान् श्रीसुदर्शनः ।
रक्षां करोतु सर्वत्र सर्वत्र विजयी भवेत् ।। ७ ।।
सर्वस्मिन् वैष्णवे धर्मे प्रीतिं वर्द्धयतां सदा ।
सर्व-विघ्नान्समान्दोषान्विनाशयतुसत्वरम्।। ८ ।।
ब्रह्मादिदेव-मुनि-वन्दित-पादपद्मं
चक्रादि-षोडशभुजं-ज्वलन-प्रकाशम्।।
नानाविधाभरण-भूषित-चारुगात्रं ।
चक्रादिदेवमनिशं हृदि भावयामि ।। ९ ।।

शङ्खं चक्रं गदाब्जे शरमसिमिषुधिंचाप-
पाशाङ्कुशाब्जान्
बिभ्राणं वज्र-खेटं-हल-मुसल-
लसत्कुन्तमत्युग्रदंष्ट्रम् ।
ज्वाला-केशं त्रिनेत्रं ज्वलदनलनिभं
हार-केयूर-भूषं
ध्याये षट्कोण-संस्थं सकल-रिपु-जन-प्राण-
संहार-चक्रम् ।। १० ।।

ॐ नमो भगवते महासुदर्शनाय
महोग्राय महाचक्राय
महामन्त्र–महावीर–महातेजो
भयङ्कराय सर्वदुष्ट–भयङ्कराय
सर्वशत्रून् ग्रस ग्रस भक्ष भक्ष,
परमन्त्रान् ग्रस ग्रस भक्ष भक्ष,
परतन्त्रान् ग्रस ग्रस भक्ष भक्ष,
पर–विद्यां ग्रस ग्रस भक्ष भक्ष,
दैत्यान् ग्रस ग्रस भक्ष भक्ष,
पर–शक्तिं ग्रस ग्रस भक्ष भक्ष,
मूढान् ग्रहान् ग्रस ग्रस भक्ष भक्ष,
दैत्य–दानव–राक्षसान् ग्रस ग्रस भक्ष भक्ष।

गन्धर्व–यक्ष–भूत–प्रेत–पिशाचान् ब्रह्मराक्षसादीन् ग्रहान् ग्रस ग्रस भक्ष भक्ष, दह दह, मर्दय मर्दय, छिन्धि छिन्धि, भिन्धि भिन्धि, खादय खादय, कालय कालय, कुरु कुरु, हुँ फट् स्वाहा।
ॐ श्रीचक्राय सुदर्शनाय स्वाहा।

**प्रार्थना :-**

भूम्यां च ह्यन्तरिक्षे च पार्श्वतः पृष्ठतोऽग्रतः ।
रक्षां करोतु भगवान् विश्वरूपी जनार्दनः ।।
यथा विष्णोः स्मृतेः सद्यः संक्षयं याति पातकम् ।
तथैव सकलं दुःखं प्रशाम्यतु सुदर्शनः ।।

**फल-स्तुति :-**

इदं वर्म पवित्रं वै सर्वथा भय-नाशनम् ।
सर्वाभीष्ट-प्रदं सद्यः सर्व-रोग-निवारणम् ।।

इति श्रीसुदर्शन-संहितान्तर्गतं
सुदर्शन-कवचं सम्पूर्णम् ।

श्रीराधागोपालार्पणमस्तु